घृणिः सूर्य आदित्यो न प्रभा वात्यक्षरम् । मधु क्षरन्ति तद्रसम् । सत्यं वै तद्रसमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम् ।

( तै० आ० प्र० १० अ० १७ )

घृणिः सूर्येति । भगवानादित्यो वाति वैहायसेन मार्गेणाहर्दिवं गच्छति लोकानुपकर्तुम् । किंविधः । जगत्प्रसवहेतुत्वात्सूर्यः । दीप्तिमत्त्वाद्घृणिः । क्षरणराहित्येन नित्यत्वादक्षरमक्षरः । केव प्रभेव । नकार उपमार्थः । आदित्यसंबन्धिनी प्रभेव । आदित्यस्योपमानान्तराभावात् । स्वप्रभा गोलकीभूय व्योममार्गेण गच्छति चेद्यथा तथा प्रभावानयमित्यभूतार्थमुपमानम् । अपि च तद्रसं तस्मात्पूर्वोक्तादादित्याज्जन्यं रसमुदकं मधु मधुरं यथा तथा क्षरन्ति नद्यो वहन्ति । आदित्यलब्धवृष्ट्युदकमेव नद्यो वहन्ति, अन्यथा भूमावुदकाभाव इति भावः । उत्तरार्धेनाऽऽदित्यब्रह्मणः सर्वात्मकत्वमुच्यते—तदादित्यलक्षणं ब्रह्म सत्यं यथार्थभाषणं रसं मधुरादिरसजातम् । आपः सिन्धुनद्यादिगतमम्भः, ज्योतिश्चन्द्राग्न्यादि, रसः पदार्थमात्रसारः, अमृतं सुधा, ब्रह्म त्रयी विद्या, भूर्भुवः सुवस्त्रय इमे लोकाः, ओमोंकारः । वै, एतत्सर्वमादित्य एवेति मनसा विभावयेदिति भावः ।

वषट्ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ।

( तै० सं० का० २ प्र० २ अ० १२ )

वषट्त इति । अस्यते क्षिप्यते कर्मानुष्ठानाय देवतया विधिना वा प्रेर्यत इत्यासो यजमानः । तादृशोऽहं ते तवाऽऽसमन्ताद्वषट् कृणोमि हविर्दानं करोमि । शिपिषु पशुषु विष्टः प्रविष्टो यज्ञः शिपिविष्टः पशुसाध्यो यज्ञ इत्यर्थः । 'यज्ञो वै विष्णुः पशवः शिपिः' इति श्रुतेः । हे शिपिविष्ट यज्ञात्मक विष्णो मे मदीयं तद्धव्यं जुषस्व । सुष्टुतयः शोभनस्तुतिरूपा मे गिरस्त्वां वर्धन्तु वृद्धिं प्रापयन्तु । एकस्मिन्नपि विष्णौ यूयमिति पूजार्थं बहुवचनम् । पूज्या यूयं स्वस्तिभिः श्रेयोभिर्नोऽस्मान्सदा पात रक्षत ।

इति तैत्तिरीयप्रातःसंध्याभाष्यम् ।

## अथ तैत्तिरीयमध्याह्नसंध्याभाष्यम् ।

---

माध्याह्निकसंध्यानुष्ठानाभिमन्त्रितजलपानार्थं मन्त्रमाह—आपः पुनन्त्विति । [ तै० आ० प्र० १० अ० ३० ] या आपः सन्ति ताः पृथिवीं पुनन्तु प्रक्षालनेन शोधयन्तु । सा च पृथिवी पूता शुद्धा सती मामनुष्ठातारं पुनातु शोधयतु । तथा ब्रह्मणो वेदस्य पतिः प्रतिपालकमाचार्यमेता आपः पुनन्तु । तेनाऽऽचार्येणोपदिष्टं ब्रह्म वेदस्वरूपं पूता स्वयं पूतं सन्मां पुनातु । अन्यभुक्तावशिष्टरूपमुच्छिष्टं यदस्ति यच्चाभोज्यं भोक्तुमयोग्यं तादृशं कदाचिन्मया भुक्तम् । यद्वा दुश्चरितमन्यदपि प्रतिषिद्धाचरणरूपं मम किंचित्संपन्नं तत्सर्वं परित्यज्येति शेषः । ततो मामापः पुनन्तु । तथाऽसतां शूद्रादीनां प्रतिग्रहं च मया कृतं पुनन्तु, तदर्थमिदमभिमन्त्रितमुदकं स्वाहा मदीयवक्त्राग्नौ हुतमस्तु ।

दधिक्राव्णो अकारिषमित्यादि व्याख्यातमेव ।

अथोपस्थानम्—उद्वयमिति [ तै० सं० का० ४ प्र० १ अ० ७ ] । वयं तमस उत्तरं ज्योतिस्तमसो विनाशकत्वेनोत्कृष्टमग्निसंबन्धि ज्योतिरुत्परिपश्यन्त उत्कर्षेण सर्वतोऽवलोकयन्तो देवत्रा देवेषु मध्ये सूर्यं देवं सूर्यरूपेण वर्तमानमग्निसंबद्धमेवोत्तमं ज्योतिरगन्म प्राप्ताः स्मः ।

उदु त्यमिति [ तै० सं० का० १ प्र० ४ अ० ४३ ] । केतवः प्रज्ञापकाः सूर्यरश्मयः, जातो वेदो ज्ञानं यस्मात्तं जातवेदसं देवं प्रकाशमानं त्यं तं प्रसिद्धं सूर्यं विश्वाय सर्वलोकस्य दृशे दर्शनार्थमुद्वहन्ति ऊर्ध्वं वहन्ति । उकारोऽनर्थकः । 'मिताक्षरेष्वनर्थकाः कमीमिद्विति' इति यास्कोक्तेः ।

चित्रं देवानामिति [ तै० सं० का० १ प्र० ४ अ० ४३ ] । मित्रादित्रयोपलक्षितस्य जगतो जङ्गमस्य तस्थुषः स्थावरस्याऽऽत्मा स्वरूपभूतः सूर्यः । द्यावापृथिवी स्वर्गभूमी । दिवो द्यावेति द्यावादेशः । अन्तरिक्षं चाऽऽप्राः समन्तादपूरयत् ।

तच्चक्षुरिति [ तै० आ० प्र० ४ अ० ४२ ] । चक्षुरुक्तार्थम् । देवहितं देवानां हितं यस्मात् । सूर्यमण्डलदर्शने सति बहुलकर्मानुष्ठानप्रवृत्त्या देवानां हितं भवति । शुक्रं निर्मलम् । तत्प्रसिद्धं सूर्यमण्डलं वयं शतं शरदः, अत्यन्तसंयोगे द्वितीया । पश्येम । अन्यत्स्पष्टम् ।

---

## अथ तैत्तिरीयसायंसंध्याभाष्यम् ।

---

सायंसंध्याकाले जलपानार्थं मन्त्रमाह—अग्निश्चेति [ तै० आ० प्र० १० अ० ३१ ] । योऽयमग्निरस्ति यश्च मन्युः क्रोधाभिमानी देवः । ये च मन्युपतयः क्रोधस्वामिनस्तस्मिन्नियामका देवाः सन्ति ते सर्वेऽपि मन्युकृतेभ्यो मदीयकोपनिष्पादितेभ्यः पापेभ्यो रक्षन्तां पापिनं मां तत्पापविनाशनेन पालयन्तु । किंचातीतेनाह्ना तस्मिन्नहनि यत्पापमकार्षं कृतवानस्मि । केन साधनेन, मनआदिभिः शिश्नान्तावयवैः । तत्सर्वं पापमहरवलुम्पतु अहरभिमानी देवो विनाशयतु । परहिंसादिचिन्तनं मानसं पापम् । अनृतादिभाषणं वाचिकम् । अभिचारहोमादिकं हस्तकृतम् । पादेन गोब्राह्मणस्पर्शादिकं पादकृतम् । अभोज्यभोजनमुदरकृतम् । अगम्यागमनं शिश्नकृतम् । अथवा किमनेन परिमितगणनेन यत्किमपि दुरितं मयि निष्पन्नमिदं पापजातं सर्वं तत्कर्तारं मां च लिङ्गशरीररूपममृतयोनौ मरणरहिते जगत्कारणे सत्ये बाधरहिते ज्योतिषि स्वयंप्रकाशे वस्तुनि जुहोमि प्रक्षिपाम्यहमनेन होमेन तत्सर्वं भस्मी करोमि । तदर्थमभिमन्त्रितं जलं स्वाहा मदीयमुखाग्नौ सुहुतमस्तु ॥

सायंसंध्योपस्थानम्—इमं म इति ( तै० सं० का० २ प्र० १ अ० ११ )। हे वरुण मे मदीयमिमं हवमाह्वानं श्रुधि शृणु । श्रुत्वा चाद्यास्मान्मृडय सुखय । अवस्युः पालनेच्छुस्त्वामाचके, आ समन्ताच्छब्दयामि प्रार्थये ।

तत्त्वा यामीति ( तै० सं० का० २ प्र० १ अ० ११ ) । तत्तस्मै वरुणाय ब्रह्मणा मन्त्रेण वन्दमानस्त्वा यामि त्वां प्राप्नोमि । अयं यजमानो हविर्भिराराध्य त्वद्रक्षणमाशास्ते हे वरुणाहेडमानः क्रोधरहित इह कर्मणि बोधि अस्मद्विज्ञापनां बुध्यस्व । हे उरुशंस प्रभूतस्तुत नोऽस्माकमायुर्मा प्रमोषीर्मा विनाशय ।

त्वं नो॑ अ॒ग्ने वरु॑णस्य वि॒द्वान्दे॒वस्य॒ हेडोऽव॑ या-
सिसीष्ठाः । यजि॑ष्ठो॒ वह्नि॑तमः॒ शोशु॑चानो॒
विश्वा॒ द्वेषा॑ꣳसि॒ प्रमु॑मुग्ध्य॒स्मत् ।

( तै० सं० का० २ प्र० ५ अ० १२ )

त्वं नो अग्न इति । हेऽग्ने त्वं नोऽस्माकं भक्ति विद्वान्सन्वरुणस्य देवस्य हेडोऽस्मद्विषयं क्रोधमवयासिसीष्ठा अपनय । यजिष्ठो यष्टृतमोऽतिशयेन यागनिष्पादकः, वह्नितमोऽतिशयेन देवहविर्वोढा, शोशुचानोऽत्यन्तं दीप्यमानः, विश्वा द्वेषांसि सर्वान्विरोधिकृतान्द्वेषानस्मत्प्रमुमुग्धि अस्मत्तः प्रमोचय ।

स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या
उषसो व्युष्टौ । अव यक्ष्व नो वरुणꣳ रराणो
वीहि मृडीकꣳ सुहवो न एधि ।

(तै० सं० का० २ प्र० ५ अ० १२)

स त्वं नो अग्न इति । हेऽग्ने स त्वं नोऽस्माकमूत्या रक्षणेनावमो रक्षको भव । कीदृशस्त्वम्, अस्या उषसो व्युष्टौ नेदिष्ठः, अद्यतनस्योषःकालस्योपरितने प्रातःकालेऽत्यन्तं प्रत्यासन्नः । नोऽस्माकं वरुणं वरुणेन कृतमभीष्टनिवारकं पापादिकमवयक्ष्व नाशय । रराणो रममाणः सन्मृडीकं सुखसाधनमस्मदीयं हविर्वीहि भक्षय । ततो नोऽस्माकं सुहव एधि सुखेनाऽऽह्रातुं शक्यो भव ।

यच्चिद्धि ते विश इति प्रातःसंध्यायां व्याख्यातमेव ।

इति तैत्तिरीयसायंसंध्याभाष्यम् ।

इति तैत्तिरीयसंध्याभाष्यं समाप्तम् ।